घनमाक्षिक मुध्दूय यदगृहणात् पयोमधु॥
अत एवामृतकरः शरदिंदुः प्रतीयते ॥१५३॥
रविचक्रेण निर्भिद्य मुदिरं महिषासुरं ॥
शरन्नारमणीचक्रे विमलं भुवनत्रयं ॥१५४॥
शरच्चंद्राननां दृष्ट्वा प्रोत्फुल्लकमलेक्षणां ॥
रवि र्विरहसंतप्तो विजहाति घनांशुकं ॥ १५५ ॥
वर्षाकालकिरातेन पातिते घनजालके ॥
शरत्समयविप्रेण पतंगः खे विमोचितः ॥ १५६ ॥
लक्ष्मणालंकृतेनाशु रामचंद्रेण शारदः ॥
अलंकावासकर्त्तासौ मेघनादः प्रशाम्यते ॥ १५७ ॥
शिरा श्छिच्छेद धाराभि र्भुवः प्रावृट्चिकित्सकी ॥
अत एव शरन्नद्यः सद्यः शुद्धत्व माप्नुवन् ॥ १५८ ॥
क्षणान्मायाविनानेन कुपथे पातितो जनः ॥
ययौ प्रशासितुं पंक मित्यभ्रशिबिरादितः ॥ १५९ ॥
इंदुवक्त्र मरविंदलोचनं स्वच्छरूप ममलांबरावृतं ॥
योषितां शतमिवावलोक्यते चारुहंसकरुतं शरच्छतं ॥१६०॥

एवं शरदासादिते मेदिनीमंडले नितांतशीतवेपितायाः प्रियायाः स्वयंग्रहपरिरंभणेन नंदनंदनस्यानंदमुदंचयत्पंचेषुरिव हेमंतसमयः प्रावर्त्तत ॥

तथाहि ।

दोषाकरकरैः स्पृष्टः पूर्वापरपथे चरन् ॥
कर्तुं दाक्षिणतीर्थानि मार्गेसौ याति भास्करः ॥१६१॥
कामिनीकरपद्मानां रक्षणाय हिमागमे ॥
भानुना भानुभि र्मन्ये बृहद्भानुरयं कृतः ॥१६२॥
भानुना स्वकरैः क्रूरै र्हिमवान् द्रावितः पुरा ॥
हिमानीतेन सेनेयं प्रेरितास्य पलायते ॥१६३॥
कलावंतं समासाद्य हेमंतेन पराजितः ॥
मन्येहं दस्युतातत्वा दत्यर्थं हीयते रविः ॥१६४॥
कन्याकुमारिकाया वेषं प्रविधाय भानुना दृष्टः ॥
पारदरूपो हिमवान् धावति पृष्ठे परिस्खलन् तस्याः ॥१६५॥
परिक्षीणो दृष्टो दिनपति रकांडे क्षणदया ॥
कृता हेमंतर्त्तौ परिणतमृगांकस्य कुपिका ॥
तया दृष्टा पुष्टिः प्रथममधिका स्वीयवपुषः ॥
ततो दातुं मन्ये मकरजमुहूर्ते मृगयते ॥१६६॥

एवं हेमंतमन्मथमतंगजेन त्रोटितशरन्निगडेन लोडितजलाशयेन मोटितकमलानिलयेन प्रकंपितजनपदसमुदायेन परितः फूत्कारानिःसारितकरशीकरेण करेणो रैरावणस्य स्पर्शलिप्सया घनीकृतगगनगंगाप्रवाहसोपानेनोज्जृंभितं यदीयापूर्वदर्शनभयेन भानो स्तुरंगमा ह्यन्वर्थनामानो बभूवुः तानिव कांदिशीकाशिशिरोपायेन सांत्वयन् परावर्त्तयितुं शिशिरर्त्तुः प्रावर्त्तत ॥

तथाहि ।

वृषयुक्पुष्पवत्पेटी मार्गवृक्षेण पाटिता ॥
कीर्णार्धा तारकाव्याजाद् अर्धा द्यौ स्त्वरयापतत् ॥१६७॥
एकांबर मुभयो रपि लापित मेनेन हंत शिशिरेण ॥
अभजत्ततो नु भानु र्बहुकाष्ठांतरमरुज्ज्वलज्ज्वलनं ॥१६८॥
कविना प्रतिभाविजितः प्रभाकरोपि न तु जाड्य मापन्नः ॥
प्रययौ निरुत्तरः सन् पुष्येसौ जातवेदसः शरणं ॥१६९॥
अगमत्सुभगां नु कर्मसाक्षी शिशिरर्तौ वभिसारत स्तामिस्त्रां ॥
प्रविलोक्य गुरूदरत्व मस्या स्तत एव त्वरयोत्पथं जगाम ॥१७०॥
माघे स्नात्वाब्धिसलिलादुन्ममज्ज दिवाकरः ॥
एकांबरावृतो गेहे शीतार्त्त स्तूर्ण मभ्यगात् ॥१७१॥
निर्जितो नु शिशिरेण निर्ययौ भानु रेष कलिना यथानलः ॥
पुष्करा दपसर न्निरंकुशः सीतबिभ्यदभि पावकीं दिशं ॥१७२॥

एवं वसंतप्रमुखर्तुभिः स्वस्वलीलासु प्रदर्शितासु भगवान् यशोदादायादः प्रियया सह राधया कदाचन सकलकुसुमपरिमलास्वादनैः कदाचन जलक्रीडाभिः चंदनचर्चनैः पुष्पशय्याविवर्त्तनैः कायमानविहारैः कदाचन मदनकेलीविलासै स्तत्तदृतुधर्मान् सार्थकीकुर्वन् आनंदबंधुरः सुख मुवास ॥

॥ श्रीः ॥

इति श्रीमज्जयरामकविरचिते राधामाधवविलासे चंपूकाव्ये षड्ऋतुवर्णनं नाम चतुर्थोल्लासः ॥ ४ ॥

---

## पंचमोल्लासः



अथ कदाचन भगवति नंदनंदने तया दयितया सह विहरमाणे भगवति मयूखमालिनि तदाराधनायेव विरत्नरत्नजात माहर्त्तु पश्चिमपारावारगांभीर्यावलोकनेच्छया पूर्वमपरगिरिगंडशैल मुदंडरश्मिमिव बद्धं विदधति तदनु मधुसूदनवदनशोभापराजितोपि तत्र स्ववशांकुरकृतमिदमित्यनुसंधाय

तद्वलोकनलालस श्चक्रवाकविलासिनीविरहानलज्वालापटलपरीत इवारक्त-मंडलो विरहिजनमग्नसमोहनाय शंबरारातिसमासादित इव दिव्यास्त्र-तेजःपुंजः यामिनीकामिनीकरकमलकलितकमनीयामिव कोकनदं शृंगाररस इव शरीरधारी दिङ्मंडलाक्रमणचंक्रमणशीलस्य मदनमहीपतेः प्रस्थान-समयसमुचितसंध्याविलासिनीपाणिपंकजसमासादितपीयूषलक्ष्मछलदधिदूर्वापूरितराजतभाजनं गगनविपिनतारकानिकरगोकुलपरिपालनं कुर्वता संध्यारागारुणितनिजमंडलतया कंसपरिस्थापितचाणूरमुष्टिकपुष्टतरशरीरं एकमुष्टिघातेन पिष्टप्राय माभिकर्त्तु मभिलषतो मल्लयुद्धाभ्यसनायाप्रतिद्वंद्वतया रंगभूपरिसर परस्परपरिकल्पितकरचरणावरणकुंडलीमंडलयोः संकर्षण-कृष्णयो र्लक्ष्मी माविष्कुर्वाणः सुरवर्त्मकुरुक्षेत्रे नक्षत्रक्षत्रियकुलोभयपक्षात् सप्तसप्तिसंशप्तकपतिना समराय समाकूतयोरिव तदभिमुखं माधवमानयोः कल्पितचंदनस्यंदनयोः पांडुनंदननंदनदनयोः श्रिय माश्रयमाणः त्रिभुवन-मेकेनैव पणेन विजेतुकामेन कामेन पणार्थिना दशदिक्कविपणिकामध्ये निक्षिप्तस्य नीलांबरस्योपरि परितः प्रसारितोडुगणमुक्तानिकरस्य परिविकैतवकांस्यपात्रांतर्निहितकलंकले खलांछितगजदंतविहिताक्षस्य बधुतां दधानः पूर्वोत्तरकाष्ठावेष्टितात्रिविष्टपतदीयवनतंतुभि र्भुवने विजेत्रे मदनमहाराजायोपहारीकर्त्तु किमपि विन्नष्तुकामेन विधितंतुवायेन विरचितस्य नीलिरागरंजितमध्यस्य संध्यारागारुणितपल्लवद्वयस्य तारकारजतबिंदुलांछितस्यांबरस्य कुत्राचिदपूर्णस्य पुनरपि रंजनायानीतं स्फाटिकं नीलीभाजन-मिति धियं जनानां जनयन् मनसिजनरपतिगुणगणगणनाय विधिविरचितोडुकुलमुक्ताफलमालाया इव मेरुमणिः यावद्दिन मतिखरतरदिनकरकर निकरसंपातसमुत्पादितसंतापाः कुमुदिनीकुटुंबिनीः कराभिमर्षेण निकृत-विषादाः समादधानः पीयूषपिपासाकुलचकोरनिकरचंचुपुटसटकुट्टनसंजातव्रणकिणेनेव कलंकेनांकितः अपरत्र स्वसाम्यमसहमान इव राधावदनेंदोः कांतिसर्वस्वापहरणाय करप्रकरमभितः प्रसार्यमाणः ब्रह्मभुवना न्नंदनव—नहरिचंदनस्कंधगतचंद्रिकांधकारनीरक्षीरपरीक्षाचंचुर श्चमत्कारव्यत्यासेन कलंकछला ज्जल मापीय ज्योत्स्नाक्षीर मुत्सारितवानिव द्विजराजहंसः सकललोकलोचनचंचरीकनिचयस्य कुसुमस्तबका मुच्चाय्यमानः समुदंचति शशलांछनः ॥ तदनंतर मिंद्रजालिक इव कश्चन कालोपि कौतुकलालसयो स्तयो र्निकुंजगतयो श्चमत्कारानिवादर्शयन्नाविर्बभूव ॥ तथाहि ।

कालेंद्रजालिकक्षिप्तः पारावतविवित्सया ॥
प्रतिपच्चंद्रदंभेन पक्षो व्योमकरंडके ॥१७३॥

तत स्तेनैवेंद्रजालिकेन त्रिविष्टपगतसृष्टिदृष्टिबंधन मभिकुर्वाणेन पूर्वं पेटिकानिक्षिप्तकपोतपक्षस्य पक्षपर्यंतं वर्द्धमानाभिरिव कलाभि र्निष्पादितं पारावतं तारातंडुलविलोकनेन तुंदिलितामिव पूर्णचंद्रं चरमाचलतिलकायमानं भानुं च व्यायामभूरेणुरुषित मतिस्थूलवर्त्तुलं स्फटिकोपलगोलयुगलं युगपदुल्लसितकुवलयकमलकरतलयुगले विदधता मल्लेनेव संबभूवे ॥

अपिच ।

उदितं तु हिमांशुमंडलं रवि मस्ताचलमस्तके स्थितं ॥
विधि रर्धवयाः करोत्यसा वुपनेत्रं किमु वीक्षितुं जगत् ॥१७४॥
कर्षकेण विना वियद्वना त्तेजसां निचय एष नीयते ॥
उंछवृत्ति मिव कर्त्तु मुद्यत स्तारकाकणगणै र्द्विजाधिपः ॥१७५॥
तुहिनकरः सकलंको ग्रहणाभिया क्षुधितविधुंतुदस्याग्रे ॥
कपटादिव गरलाक्तः पिंड श्चंडप्रभेण निर्मुक्तः ॥ १७६॥

ततो मदनमहीपतेः प्रतापयशसो र्गणन मभिकुर्वाणस्य सुपर्वनदीदंडरश्मिलंबितचंद्रचंडांशुमंडलतुलापुटस्य लघुपाषाणगणमिव ऋक्षगण मतिरूक्ष मिति संवीक्ष्य बहिर्निक्षेप्तुं व्यापृतसूक्ष्मदृष्टिविभवस्य कनकरजताचलछलेन तोलितपुंजयुगलमभिकुर्वाणस्य अद्याप्यसमाप्तया तदेव दिवानिशं विदधत श्चतुराननस्य चातुर्यमर्यादया द्राघीयांसं आशयं स एवेंद्रजालिकः क्षणं प्रकटीचकार । समनंतर मनंतेन नयनद्वयेनेव निरीक्ष्यमाणा विश्रब्धाविश्रब्धनवोढेव लक्ष्मीः कमलकुवलयानिलययुगलदलकपाटघट्टनविघट्टननटने पटुरपटु श्च संबभूव । तदनंतर मुच्चतरार मस्तगिरिवंशशिखरपरिसरा दुत्तरणशीलशैलूषमिव चक्रवाकयुगलविदलनरक्तात्तविधिशापचक्रमिव अकूपारकूपजलनिष्कासनरश्मिसन्नद्धकनककलशमिव द्वीपांतरकमलाकरविक्रयिणो विकासवसु संगृह्य विनिमयेन तत्करकमले भ्रमरछलेन काचमाणिगुच्छं विनिक्षिप्य कोशीकरणव्याजेन पाणिमुद्रण मुपकल्पयन् सायंकालः पोतवणिग् निजतरणिं समुद्रसरणिसंगता मकरोत् ॥ अपिच ।

प्रातः स्मार्तबृहद्भानो र्भानुगोल इवोद्धृतः ॥
अस्तंगतस्य तस्येव दंभात्संभारितः पुनः ॥ १७७ ॥

ततः कौसुंभरागरंजिततिरस्करणीमिव अस्तगिरिगैरिकधातुमार्गधावमानसप्ताश्वरथोद्धूतधूलीपटलमिव रजनीलपनालेपनं सुधांशुचुंबनेनारुणितमिव संध्याराग मरचयत् । तस्यांतरे कौतुककल्पतरु रवि कतिपयकुतुककोरकितो रचित स्तस्य फलानीव कानिचिदन्यतराणि कुतूहलानि तेन तन्नयनयोः सन्निहितान्यातेने ॥ तथाहि ।

जोत्स्नाक्षीरसमुद्रे सुप्तो नक्षत्रमालयानंतः ॥
मन्ये हिमकरबिंबं तन्नाभिस्थं सितांभाजं ॥ १७८ ॥
गगनसरोवरतीरे तारापारावतास्थितान् वीक्ष्य ॥
चंद्राय मिंद्रहस्तान् मुक्तोस्त्येनं समाहर्त्तुं ॥ १७९ ॥
गगनेनल्पकतल्पे ताराकुसुमचयविरचिते रत्या ॥
सुप्तो मनसिजनृपति र्ग्लानं निजगल्लकं कृत्वा ॥ १८० ॥
मानो मुहूर्तमपि चेष्टति यस्याः स्मरेण सा शास्या ॥
इति दर्शयितुं त्रासं त्रास इवासौ कृत श्चंद्रः ॥ १८१ ॥

सुधाधरं पार्वण मानिरीक्ष्य वितर्कयंते विबुधा मुधैव ॥
सुरासुरैः क्षीरनिधिं विमथ्य निष्कासितोसौ नवनीतगोलः॥ १८२ ॥
हिमकरो नु सुधांबरशोधने कलश एष निशाकलितः किल ॥
तदवशिष्टजलं सलघूपलं चलित मभ्रनदीभकुलछलात् ॥ १८३ ॥
मकरमीनयुगं नु सुधारुचौ समुपयुज्य सुकुंभरथे स्थितः ॥
तरति शंभुजयाय नभोंबुधौ मनसिजो न परं मृगलांछनः ॥ १८४ ॥

एवमुत्प्रेक्षित स्तत्र राधामुखसाम्यतिरस्कृतोपि तस्या एव पदनखमुखसाम्यमपि मामुपयात्विति चंद्र श्चांद्रायणमिवारभमाणः कार्यापेक्षया बहुलपक्षक्षपाक्षपितशरीरः क्षणेक्षणे क्षामतरलक्षः समजायत ॥ तस्योदरकुहरादिव बहिर्निर्गतेन पिंडीभूतेन कलंकेन राधाकचनिचयशोभाभिभूततारोषेग तस्या एव दार्ष्ट्य-निरोध माधातुमिव जगदंडकरंडपिचंडलघनजंघलाभि र्ध्वांतधाराभिः आपादिताद्वैते जगति राधाधरबिंबतेजोनिर्जित एव दिगंतरसमाश्रयिणि संध्यारागे चरति मदनकरपीडनोत्सव गगननगरचत्वरनिखातोछलदनलकुसुमतारतरधवलधूमधारायितसुरसरित्प्रवाहांधकारौघधापूरितसंध्यारागाग्नियंत्रनलकसंधुक्षणवर्त्तिकेव अंधकारनिमग्नतनु रतनुप्रकाशाय वैश्वानर मुत्पादयितु मिव विधिकरकमलकलितपश्चिमाचलगंडशैले मुहुर्मुहुः संघट्टनाद्धवलिता यशःशलाकेव पुष्करपिपासया पुष्करनिहितपुष्करस्य वक्रतरदंष्ट्राचक्रनक्रवक्त्रगृहीतचरणस्य तिमिरगजेंद्रस्य पुष्कराक्षदुष्काराद् इह रक्षरक्षेत्यंतरिक्ष मुद्वीक्ष्य सूक्ष्मतरपक्षिकंठभाषमाणस्य विमोक्षणाय विक्रमैकनिलयशक्रानुजानिक्षिप्तानिमग्ननिष्कामचक्रधारेव गगनतडागोदरवननिमग्नतुहिनभानुबिंबबकचंचूचरणचालनजंबालतमःपटलविनिर्गतक्षुद्रत्तारकानिकरांतरोच्छलितैकमच्छस्य पुनर्गच्छतो नवछन्नपुच्छामिव अंधकारकर्दमितनभोमंडलालवालमीलितेंदुकंदज्योत्स्नाचंदनजलासिंचनोदंचदमंदकंदललिताललविदलद्दलद्वयामिव मनसिजनरपतिजगद्विजयनभोदुदुभिनिहितचंदनयष्टिकेव चंद्रशेखरमूर्ति-

रिव विदलितांधकारा लक्ष्मीरिव विष्णुपदप्रवणा धार्मिकैकधराधीशनिदेशवेत्रवल्लिरिव कुवलयोल्लासिनी जांबवतीव ऋक्षकुललतितशरीरा मीनकेतनतनुरिवानंतजा तरणिरिव जलनिधिकूलगता कृपणनरपतिचित्तवृत्तिरिव मुद्रितकमलाविलासा वृषभाननंदिनीव कृष्णपक्षनिर्गमनमंजूला संध्यांघविलासिनी चंदनतिलकलिपिरिव काचन रेखा पश्चिमादिङ्मुखमंडले समुल्ललास ॥

अपिच ॥

सांध्यरागदहनोपरिस्फुरद्बालशांतकिरणछलादिदं ॥
कारुकेण मनसिजस्य कामुकं निर्बलं द्रढयितुं प्रताप्यते ॥१८५॥
नव्यशीतकरकैतवाद्विधि र्गव्यदुग्धयुतशृंगधारया ॥
निर्गलद्धवलविंदुवृंदया व्योमलिंगमभितोभिषिंचति ॥१८६॥
चंडभानुकलशं विधित्सुना दंड एष विनिवेशितः किल ॥
बालशीतकिरणच्छलाञ्चलत्कालचक्रशिखरे विराजते ॥१८७॥
सांध्यरागदहनद्रवीभवन्नव्यशीतकररौप्ययष्टिकां ॥
कंकणाय विधिरुक्मकारकः संदधेस्तगिरिकूटमस्तके ॥१८८॥
रभसान्नभसः पथि त्रुटद्रथनेमिः पतितास्ति भानवी ॥
अभिनव्यनिशाकरभ्रमं कुरुते सैव जनस्य पश्यतः ॥१८९ ॥
पृतनानृपते र्मनोभुवः स्थितिमत्रैव परां करिष्यते ॥
प्रतिपच्छशलांछनछलाद्ध्वलकेतुः किल कीलितो यतः ॥१९०॥
मलिनं मदनास्त्रजालकं विमलं कर्तुमिवासिधावनीं ॥
अभिनव्यकलानिधिछलाद् जगृहेसौ विधिशास्त्रमार्जकः ॥ १९१॥
प्रतिपच्छशभृच्छलात्किकामुडुमुक्ताफलकानि रंध्रितुं ॥
विदधे नु वियन्महोदधेः सविधेसौ विधिरत्नवेधकः ॥१९२॥
कंदर्पस्तारकैः पुष्पैः कुर्वन् विष्णुपदार्चनं ॥
बालचंद्रछलादेकं केतकं समयोजयत् ॥१९३॥
सुधादिग्ध मनंगेन क्षिप्तं पापार्द्धिकारिणा ॥
नव्येंदुदंभसंरंभात् पुष्करं मच्छवेधनं ॥१९४॥
वारुणीसेवनोन्मत्तनीलांबर मुपक्षिपन् ॥
नमो यमश्वसारं नु क्रष्टुं बालेंदुलांगलः ॥१९५॥
मन्येनंगशिशोः कंठे दुष्टदृष्टिनिबर्हणं ॥
बालचंद्रछलान्नद्धं वैय्याघ्रं विधिना नखं ॥१९६॥
समुल्लसद्व्योमपटांतरेस्मिन् ताराक्षरै र्मन्मथभूपलेखं ॥
लिखन् विधिर्धीसचिवो नु चक्रे वक्त्रेंदुदंभा न्निजचिन्हमंते॥१९७॥

एवं समुज्जृम्भमाणे प्रतिपच्छशलांछने समंततः समुपजातोत्कंठौ राधामाधवौ मन्मथकलीलालसौ लीलामंदिरमविंदताम् ॥ श्रीः ॥

॥ इति श्रीमज्जयरामकाविविरचिते राधामाधवविलासे चंद्रोदयसूर्यास्तमयवर्णनं नाम पञ्चमोल्लासः ॥ ५ ॥

---

## षष्ठोल्लासः

श्रीः

अथ कदाचिन्नानादिंगतेष्वस्मिन्प्रबंधे पापठ्यमाने तत्रत्यरसिकजनसमाज स्तच्छ्रवणेन परं कौतुहल मवाप्य सविस्मयं प्रबंधपाठक मेवं पप्रच्छ ॥ अहोस्मद्देशे भाषया राधामाधवयो र्विलासाभिधेयस्य प्रबंधस्य कर्त्ता जयरामो नाम कवीश्वरः श्रुतो वर्त्तते ॥ अस्य प्रबंधस्य कर्त्ता जयरामो नामान्यः कवीश्वरः क इति । ततस्तेनोक्तं स एवेदानीं महाराजानिकटे वर्तते इति । ततः पुनरपि स रसिकजनसमाजः पप्रच्छ स महाराजो नाम क इति । तत स्तेन तच्चरित मुच्चरितं । तथाहि ।

एकक्ष्मापतिरित्यशेषजगतीमध्ये मदीयाभिधा
भूयादित्यधिपो विधे र्वसुधया लब्धोब्धिपर्यंतया ॥
संतुष्टो हि तया शमोपनतया कीर्तिप्रतापोज्वलः
सोयं वरिधुरंधरो विजयते सौंदर्यरत्नाकरः ॥ १९८ ॥
राजन् भोसलवंशमौक्तिकमिलद्धारावलिप्रोल्लसत्—
श्रीमन्नायकशाहसूनुमाणिना योहर्निशं भूषितः
गंभीरांबुनिधे रभूज्जनयितु र्गंगांबिकायां च यो
बालेंदु र्जयराम एष तनुते चंपूमयीं चंद्रिकां ॥ १९९ ॥

अस्ति श्रीमान् प्रशस्तविभवः समस्तवसुमतीवास्तव्यवसुंधराधीश्वरकोटिकोटीरकोटिप्रत्युप्तप्रद्योतनप्रभाकरप्रकाशमानमणिगणकिरणराजिनीराजितचरणराजीवः सकलदिगंततदंतावलिमौलिभूषणायितप्रतापसिंदूरः प्रतिपक्षक्षोणीपालवृक्षधक्षणदीक्षाशिक्षणविचक्षणः शराशुशिक्षिणीरसिकः सर्वोर्वीभृदखर्वगर्वसर्वंकषो निजतेजोविजितजलजिनीजीवितेशः समस्तादिगंतलंघनजंघालाभि रुपचितगगनकल्लोलिनीकुशलानुयोगाभि रुदारमंदारकुसुमसौरभपरिभाविनीभि रुन्मूलितकलंकपंकसंकरतया कैरविणीरमण मात्मैकशरण मादधानाभि राच्छादितदिगाशियशोलेशाभिः कुक्षिकोणनिक्षिप्त-

पारावारपरंपराभिः पीयूषादप्याकर्षितशेषशेषाजिव्हाश्लेषाभिः यशोराशिपरंपराभि रुद्भासितजगदंडपिचंडः कारुण्यकल्लोलमाली वनमालीव भूभारसंभरणशीलः समुन्मीलितानिजभुजादंडकंडूखंडनाय परमवलंबितजगद्विजयविभ्रमः प्रोत्तुंगवितरणगुणगारिमपरिभूतकल्पपादपाटोपः सौजन्यजन्यसंभावनाविर्भावितनलनहुषभगीरथरामचंद्रहरिश्चंद्रादिविचित्रचरित्रः समुल्लसितभोसलकुलनरपालकृतसुकृतपारावारराकासुधाकरः शाहमहाराजो नाम। यस्य खलु शौर्यौदार्यगांभीर्यादिगुणगणगारिममाधुरिमविचित्रचारित्राणि दूरवासिनोपि विबुधाः पारिजातपल्लवानिव श्रोत्रयो रवतंसयंति। अपिच।

पार्थः स्याद्वेति पृथ्वीपरिवृढनिवहो यस्य निध्याय शौर्यं
दातृत्वं यस्य बुद्ध्वा स्मरति बुधजनो विक्रमार्कोद्भवयस्य॥
ज्ञातृत्वं यस्य मत्वा स्मरति कविजनो भोजभूमीभुजोपि
क्षोणीभृत् शाहनामा भवतु कथमसा वन्यसामान्यशीलः॥२००॥

तस्मिंश्च राजनि धरणिमंडलमंडनायिते सति तदीयगुणगणाकृष्टा इव नानादिगंतवास्तव्याः पंडिताः कवयश्च शतशः सहस्रश स्तत्सभामासाद्य स्वकीयगुणगणप्रकाशनेन परिपूर्णमनोरथाः स्वस्वदेशा नासादयंति स्म। एवं कतिपयदिवसैः श्रीमत्कृष्णभास्करगरुडध्वजात्मजभोजराजसहायः सूर्यपर्वज्योतिष्मतीप्रयोगप्रभावप्राप्तकवित्वसिद्धि र्जामदग्नि वत्सगोत्रसंभवः पिंड्योपनामको जयरामो नाम कवि र्द्वादशभाषाकविताचातुरीधुरीणश्चारणमुखा देतदीय मौदार्य मवधार्य समुपजातकुतूहल स्तुलजाभवानीं श्रीमत्पांडुरंगं च कतिपयपद्यै र्नुत्वा नत्वा च प्रभुदर्शनाकांक्षी महाराष्ट्रदेशा दागत्य ब्रह्मविद्यानिष्णातं श्रीमच्छिवरायगोस्वामिनं नमस्कृत्य स्वमभीषितं प्राह। स च सिंहासनासीनं राजानं सकलबुधकविगुरुपरिवृतं सुधर्मामध्यासीनं अपरमिव धरणिपुरंदर मेवं व्यजिज्ञपत्। महाराज कोपि महाराष्ट्रदेशा दागतो जयरामो नाम महाकवि र्द्वादशभाषाकवीश्वरः प्रभुदर्शनाकांक्षी तिष्ठति। राजा सकुतूहलं कवीनां पंडितानां च मुखमवलोक्य विविधकथाकथकै र्वीरेश्वरवैद्यै र्भवद्भि श्चाग्रतो गत्वा समानेतव्य इत्यवोचत्। तत स्तैः सह प्रविष्टो जयरामकवीश्वरः स्वस्तीत्युक्त्वा निर्दिष्टप्रदेशे उपविश्य द्वादशनारिकेलफलान्युपहारीचकार। राजा सकुतूहलं किमिति द्वादशफलान्युपहारीचक्रीयंते इति साकूतमपृच्छत्। कविः। द्वादशभाषासु संस्कृतप्राकृतगोपाचलीयगुर्जरवक्तरढुंढारपंजाबहिंदुस्थान—बग्गुलयावनीदाक्षिणात्ययावनीकार्णाटकाख्यासु निरर्गलं कवयामीति ज्ञापयितुमिति। तदाकर्ण्य राजा। भवतु भवत्कवित्वरीति रवगंतव्या सा

चापि कीदृशी तदर्थं भवद्भि र्विरचितपूर्व मेकं किमपि काव्यं पठनीयं। कविः द्वादशभाषाभि रेत्र विरचितपूर्वः श्रीमद्राधामाधवविलासो बाललीलादानलीलामानलीलाप्रकरणत्रयात्मको वर्तते श्रोतव्य इत्यवोचत्। तत स्तदानीं तेन कविवरेण सप्रेमप्रेरितो नानावर्णरक्तिरागताललयगायननिपुणगायकः पंचसायकसायकायितायसमुखनखमुखाविक्षतां रतीमिव माणितं काणित मातन्वानां स्पष्टवर्णोच्चारणशक्तिमतीमिति नारदस्य महतीमतिशयानां सहचरतुंबरवाद्यानुषक्तां च पांडवसभामिव निषादर्षभगांधारादिलसत्सप्ततंतुसमेतां क्षत्रियवंशावलिमिवाभिरामपरुषाहतैकविंशतिमूर्छनापन्नां त्रिभुवनमानसोन्मादनरागमदनमहामंत्रवर्णः षट्कर्णतां न गच्छेदिति शंकुषट्कप्रकीलितां विश्वकर्मणः कृतिमिव भुवनत्रये ग्रामोपशोभितां तुंबीफलपृथुलकुचयुगलमडलमंडिता मनुरागाकुला मतिप्रियां विपंचीं पंचीकृत्य तच्चंपूप्रपंचितगद्यपद्यगायनाय कंठासक्तां विधायातिरसास्वादनांदोलितमौलिर्नामावल्यादिकं गायति स्म। तदा तं प्रत्यविचित्रविततवितानतिरस्करणीचित्रव्याजा देवदिक्पालसमूहाभ्या माकर्णितु मभ्यागत मिति सभ्यानभ्यभ्यागतजनो जानन्नयनप्रोंछन मातन्वानो राजानमेव परिजनव्यजनपवनवीज्यमान मनुजानाति स्म। यस्मिन् तुंबरफलव्याजेन त्रिमालवेंकटनायकगंधर्वविद्याव्यापारपारमिवोद्वीक्षितुमुद्ग्रीवः शेषोपि भुवं भित्वा ह्यचलतया सहस्रवदनत्वं द्विसहस्रनयनश्रवस्त्वमप्येकीकृत्य श्रोतुं समपद्यत। यत्र पुरतःसौधकैलासनाथमौलिकलशगलितत्रिपथगया प्रांगणधरणिपरिसरविरचितजलयंत्रेण लोकोच्चलदमलजलधाराहितजंबीरफलास्फालनोत्तालिततरलजलछललालितलास्योदंचदधोमध्योर्ध्वसंचत्रयाभिनयबाहुभ्रमणेन भुवनत्रयेप्येतादृशो रसो नास्तीति निवेद्यत इव। स प्रबंधः पृथगेव तिष्ठति संस्कृतसंदर्भे लिखितु मयुक्तमिति न लिखितः प्रकरणप्रसंगा दग्रे भविष्यति। राजा त मामूलचूल माकर्ण्य सकलसभासद्भिः समवेतः संतुष्टतरः पर मभवत्। पुनरेवमवादीत्। समस्यायां गुणः कवे स्तर्हि समस्तैरपि प्रथमतः संस्कृतसमस्या देयाः। मयाप्येका समस्या दीयते। तां पूरयंत्वित्यादिदेश। कवि र्यदाज्ञापयति महाराज इत्यवोचत्।

॥ शतचंद्रं नभस्तलं ॥



या प्रीति र्जायते शाह मुखचंद्रं निरीक्ष्य ते ॥
पश्येयं चेन्न सा प्रीतिः शतचंद्रं नभस्तलं ॥ २०२ ॥

समनंतरं पुरोहितधुरंधरै र्धिषणाधिकबुद्धिविशारदै र्मलारिभट्टै रप्येका समस्या व्यतारि ।

॥ जंबूवद् जलबिंदुवद् जलजवद् जंबालवद् जालवत् ॥
आकाशं कुलिशायुधोपलनिभं तारा श्च हाराकृतीः
चंद्रं शाहनृपातपत्रधवलं चिह्नं तमःश्यामलं ॥
ज्योत्स्ना चंदनपांडुरा च सुहृदा × × दिवोत्प्रेक्ष्यये
जंबूवद् जलबिंदुवद् जलजवद् जंबालवद् जालवद् ॥ २०३ ॥

तदनु धीसचिवधुरीणै र्नारोपंडितदीक्षितैः क्षणमुद्वीक्ष्योज्जृंभणांगभंगी-संगमप्रसंगवशात् ।

॥ वाराणसीनगरनाथ किमाचरामि ॥

इति वदनारविंदान् मकरविंदव इव वर्णाः कविकर्णाभरणतां नीताः तामेव समस्येति । स कविः पूरयामास ।

सत्कर्मधर्मनखदानदयासुशील–
वेदान्तशास्त्रपरिशीलनपंडितेन ॥
चांडालकोपि समतां भजतेंतकाले
वाराणसीनगरनाथ किमाचरामि ॥ २०४ ॥

समनंतरं नरहरिकवीश्वरवरेण श्लोकार्द्धमेव मपाठि ।

बल्लवीचरणयो रभिसारे पल्लवीयति भुजंगमभोगः ॥
आलि याहि न विचारय राधे कालियाहिदमनस्य समीपं ॥
बल्लवीचरणयो रभिसारे पल्लवीयति भुजंगमभोगः ॥ २०५ ॥

तदनु विविधविद्याविशारदाः शारदानरविप्रहायनग्रहगणगणनानिपुणा विष्णुज्योतिर्विदो प्येव मवादिषुः ।

अजनि रजनिमध्ये मंडलं चंडभानो
र्जलनिधिमथनोत्थं कौस्तुभं संदधाने ॥
सजलजलदनीले वक्षसा वासुदेवे
असुरसुरमुनींद्रै र्ज्ञात मित्थं तदानीं ॥ २०६ ॥

विरहविकलराधा हंत बाधाधिका यत्
पिहितमपि सखीभि र्मंदिरं चंद्राबिंबं ॥
गदितामिति गवाक्षात्तथा वीक्ष्य साक्षा–
दजनि रजनिमध्ये मंडलं चंडभानोः ॥ २०७ ॥

तदनु चाऽऽरकरोपनामानः पंडितवरिष्ठा रघुनाथभट्टाः स्पष्टतरमेव-मुदीरयांचक्रः ।

॥ शरजन्मा षडाननः ॥

अन्नपूर्णे तव स्तन्यं मन्ये षड्रसमिश्रितं ॥
पृथगास्वादितुं जातः शरजन्मा षडाननः ॥ २०८ ॥
युगपच्छास्त्रषट्कं मे पुत्रोयं पठतामिति ॥
सर्वाङ्गेन कृतो मन्ये शरजन्मा षडाननः ॥ २०९ ॥

ततः शाहराजजलधरवर्षप्रसरानुसरणचतुरा विश्वनाथभट्टढोकेकरमयूराः केकामेका मुच्चतरारावमधुरमिदमुच्चारयांचक्रुः ।

॥ अंभोधि र्जलधिः पयोधि रुदधि र्वारांनिधि र्वारिधिः ॥

श्रीमन् मालनृपालनंदनमहादेवैकभक्त त्वया
चक्रे यच्छिखरे निरंबुकुहरे पीयूषतोयं सरः ॥
तद्दृष्ट्वा तृषितः स यात्रिकजनः सानंदमित्युक्तवान्
अंभोधि र्जलधिः पयोधि रुदधि र्वारांनिधि र्वारिधिः ॥ २१० ॥

ततः श्रोत्रियकुलवरिष्ठा नीलकंठभट्टाः पुराणवाचका श्चैवमूचुः ।

॥ विक्रीते करिणि किमंकुशे विवादः ॥

भूभारं हरसि निरंतरं परं तु चित्तं मे यदणुमितं कुतो जहासि ।
नोहेयं विरुदमिदं हरेति गीतं विक्रीते करिणि किमंकुशे विवादः ॥२११॥

तदनु कविजनमानसाह्लादकाः प्रह्लादसरस्वत्युपनामानः कवयः कथयांचक्रुः ।

॥ गतागतै रेव गता त्रियामा ॥

रामायणं वा श्रवणेन पेयं रामायने वा नयनं विधेयं ॥
इत्यर्धवृद्धस्य जनस्य वृत्ते गतागतै रेव गता त्रियामा ॥२१२॥

तदनु संगीतरससरसीरुहभ्रमरा वीरेश्वरभट्टचतुरा श्चैवमूचुः ।

॥ कर्पूरेण स्थगयति कुचौ शीतभीता मृगाक्षी ॥

पूर्वं घर्मे दिनकरकराक्रांतदेहा सती या ।
सद्यः शैत्यं परिकलयता ज्ञातपूर्वेण तूर्णं ॥
हेमंते सा मदनदहनस्वांतदग्धापि मुग्धा ।
कर्पूरेण स्थगयति कुचौ शीतभीता मृगाक्षी ॥ २१३ ॥

तदनु शास्त्रसल्लकीकाननगजाननाः पल्लकचेरीपुरवासिनः अक्षय्यशास्विणः केवलं कैवल्यमेवोल्लासयामासुः ।

॥ अद्राक्षं शिवमर्जुनद्रुमतले रुद्राक्षभूषं महः ॥
चंद्रादित्यहुताशनेत्र मनिशं तंद्राविहीनं स्फुरद्
मुद्रां कामपि विद्रुमद्रवतले भद्रां कराब्जे दधत्
अप्राक्षं यदहं तदेव विधिवद् विप्रां श्च योगेश्वरान्
अद्राक्षं शिव मर्जुनद्रुमतले रुद्राक्षभूषं महः ॥ २१४ ॥

तदनु तुकांबिकाकौतुकादेव तुकदेवइत्यलभ्यलब्धाभिधानाः पुराणवाचने वाचस्पतिस्पार्द्धिनीति मादधाना श्चैव कामेव समस्या मर्थद्वयेनोन्नीयतामिति नोदयामासुः ।

॥ हुताशन श्चंदनपंकशीतलः ॥

देहेंधनं त्वद्विरहेण शोषितं तस्याः समासाद्य दहत्यहर्निशं ॥
भूयात् स कृष्णाद्य तवांगसंगमाध्दुताशन श्चंदनपंकशीतलः॥२१५॥
निरिंधनः प्राणभृतां कृतांतव दहत्यहो प्राणसमीरणानपि ॥
भवत्यसौ सुप्तहुतादपींधनाद् हुताशन श्चंदनपंकशीतलः ॥२१६॥

अत्रांतरे चमत्कारेण समस्यापूरण मभ्यर्णजनाननादाकर्ण्य यौवराज्याभिषेकपवित्रगात्रो राजपुत्र स्तत्रागमनेन स्वकीय मप्रतिमरूपं परिषन्नेत्रसहस्रपत्रामित्रतापात्रतां निनाय । तं लोकोत्तरलावण्यललितं विलोक्य सा कवि र्वर्णयामास । यथा ।

गुप्तं सहस्रनयनत्वमपि त्वदीय-
मकेंद्ररूप मभिरामतया व्यनक्ति ॥
स्पष्टं निमेषरहितानि मनोज्ञवेषो—
जस्रं सहस्रनयनानि यतः स्फुरंति ॥ २१७ ॥

ततोशेषविद्यासनाथाः शेषपंडितजगन्नाथा स्तथा च अनंतशेषपंडिताः शृंगारपाथोधिमथनमधुसूदनस्य विनयशालिनो नरपतितनयातिलकस्य मनोगतामृतमिवोच्चारयांचक्रुः । शेषपंडिता यथा ।

॥ चंद्रस्य बिंबे कदलीफलानि ॥

स कवि स्तं शृंगाररसरसिकं राजतनय मनया रीत्या रंजयामास यथा ।

कस्यास्ति साम्यं सुतनोर्मुखस्य रागोपलंभोप्यधरस्य कास्मिन् ॥
प्रियाणि तस्याः कथयाशु दूति चंद्रस्य बिंबे कदलीफलानि ॥ २१८ ॥

अनंतशेषपंडिता यथा प्राचीनपद्यार्थं कथयामासुः । तद्यथा ।

इयं बाला मां प्रत्यनवरत मिंदीवरदल—
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेत मनया

अत्राभिप्रेत + लमपि ललितं विधाय पूर्वार्द्धेन सह स कविः पूरयामास यथा ।

मिलन्मल्लीमालावलिलुलितबालार्द्धशशिनः
कलावालद्धला स्फुरदरुणशैलादृतमपि ॥
इयं बाला मां प्रत्यनवरत मिंदीवरदल—
प्रभाचोरं चक्षुः क्षिपति वलितग्रीवललितं ॥ २१९ ॥

ततः स राजतनयतिलकः कंठीरवावलोकनातिर्यगुन्नमितपूर्वकायो विशालवक्षःस्थलस्थूलमुक्ताफलमालांदोलनविलोलतालीको मकरंदरसलालसचंचरीकचरणार्चननतः श्रीशाहराजात्मजातिलकस्य कलियुगसकलप्रबलयवनबलवनविदलनकरकालितकरवालोदितप्रतापदिनकरस्य स्फुरद्‌गुणगणयुतपण्डितमंडलीमंडितकवीश्वरविरचितप्रबंधसिंधुसमुद्भूतशाश्वतानिष्कलंककीर्तिशीतकरस्य प्रचंडक्ष्मापतिमंडलविजयसमासादितवसुवसुंधरादिकप्रदानप्रमुदितयाचकजनस्तुतिवचनानंदिताष्टदिग्जननिवहस्य श्रीशिवराजस्य ज्येष्ट [ भ्राता ] सकलकलाविलाससमासादितविनयः कमलपत्रमित्रनेत्रः क्षत्रियगोत्रसहस्रसहस्रपत्रमित्र स्तारुण्योदयातिमात्ररमणीयगात्रः श्रीवैभवविनिर्जितराजराजः शंभुराज स्तं कवीश्वरं स्मितविकासितवदनरुचिरदनकिरणमनोरमतममिद मवादीत् ।

॥ आकाशे चरणद्वयेन तनुते धीरं मृदंगध्वनिं ॥
शैलूषीनिजवेशपेलतनु र्वंशे नभश्चुंबिनी
स्थित्वा केशविचारणाय शिरसि व्यासक्तहस्तद्वया ॥
अग्रे तावदहो महोत्सवविधि र्व्यत्यासवलगद्वपुः
र्ह्याकाशे चरणद्वयेन तनुते धीरं मदंगध्वनिं ॥ २२० ॥

ललितमल्लिकाकुसुमावतंसः सविस्मयविस्फारितनयनः सनयताराधिनाथमिव सीतारामयोगशास्त्रार्थविचारचंचुर न्यायमीमांसादिशास्त्रसीमामीमांसकं काव्यनाटकालंकारार्थचमत्कारकल्पनाकोविदं राज्ञः सुहृदं महालयलोजिघंटाघोपोपनामान सविनयादवनतकंधरं किंचित्साचीकृतवदनारविंदं बंधुरमेवमवदत् । अहो नूनं मनोगतमप्यनेनन कविना न विना देव्याः प्रसादादिदमिदानीमापादितं । तर्हि भवंतोपि किमपि वदंत्वित्यादिदेश । ततस्तेपि स्वस्याशयं विन्यस्य समस्यामिवोपन्यासयामासुः

यथा । भानुमिश्रकरविरचितरसमंजरीपिंजरितस्वीयापरकीयासामान्यादिनायिकाभेदेषु विबुधैरपि दुरधिगमार्थबोधेषु रासिकजनानिरासितहृदयखेदेषु ज्ञातयौवनाज्ञातयौवनाप्रतिपादकश्लोकद्वये चमत्कारार्थकल्पनया स कवि रेव मश्रावि । अज्ञातयौवना यथा ।

नीरात्तार मुपागता श्रवणयोः सीम्नि स्फुरनेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ॥
शैवालांकुरशंकया शशिमुखी रोमावलिं प्रोंछति
श्रांतास्मीति मुहुः सखी माविदितश्रोणीभरा पृच्छति ॥ २२१ ॥

अत्र नेत्रोत्पलं श्रोत्रे लग्न मित्यनुभवविरोधा दसंगतार्थस्य स्फुरदिति विशेषणे न सार्थकता ।

ज्ञातयौवना यथा ।
स्वयंभूः शंभु रंभोजलोचने त्वत्पयोधरः ॥
नखेन कस्य धन्यस्य चंद्रचूडो भविष्यति ॥ २२२ ॥

अत्र तया यौवनं कथं ज्ञात मित्याक्षेपे द्योतकपदाभावात् बहिर्लापिकाप्रकारेण वा निगूढव्यापाराभिप्रायेण वा तया तूष्णीं स्थित मित्यनेनैव ज्ञातयौवनात्वं प्रतिपादितं । ज्ञाते बुभुत्साभावात् । तत स्तेन कविना च सत्कारार्थद्वयमेवमाकर्ण्यैवं वर्णितं ।

लिप्सत्यर्थं कविता यद्यपि भवतः प्रियेव सामान्या ॥
चित्रं नायकभूषण तथा तव भवति सा मान्या ॥ २२३ ॥

ततो भाषाकवयोप्यहमहमिकया समस्या ह्यददु स्तासामपि पूरणं संस्कृतसंदर्भे लिखितु मयुक्त मिति प्रकरणप्रसंगा दग्रे भाविष्यति । राजा एवमादीन् संस्कृतभाषासमस्याचमत्कारानाकर्ण्य स्वगत मेव माचिंतयत् । अहो सर्वातिशायिनी कवित्वशक्ति रस्य दृश्यते । अयमेवास्माकं शश्वत्कीर्त्तिकर्ता भविष्यति । तर्हि सर्वप्रकारेणायं प्राणवत्परिपाल्योस्माभि रिति बाल्यवयस्थ मपि स्थविरबुद्धिशालिनं कृष्णमूर्त्ति मिव स्वधमरक्षणार्थं कर्णरथारूढां कुंति मिवांगुलीभिः पंचभिःपांडवैः परिवृतां भीमसेनापसारितैकचक्रवर्तिसाध्वसां च कर्णजपसर्पदर्पनिर्वापकशकुंतेशाचंचुकुंतायितचंचुचंचुरां नानारत्नखनीं लेखनीं धारयंतं सकलकलालंकारमंडितं रघुनाथपंडितं पुरः समाहूय तत्कर्णे किमपि निर्णिक्त मुक्तवान् । तत स्तं कवीश्वरवरं विविधवस्त्रालंकारसुगंधतांबूलादिपारितोषकैः परितुष्टं विधाय सायंकरदीपिकाधरसहस्रोद्भासितसभामंडपे बंदीजनजयनिनदानंदितहृदयारविंदः पूर्वपर्वतमस्तकात् पूर्णेंदु रिवोदतिष्ठत् । ततः साय-

तनविधिं समाप्य गायननर्त्तनादिविविधभेदबोधकैः कतिपयाप्तजनैः सहाभ्यंतरसभामध्यासीनं तस्य कवीश्वरस्यैवोत्तरदेशवेशशालिनो वास्तव्यपट्टनमन्ववायं चापृच्छत् । ततो नरपते र्बहिश्चर इव प्राणो भांडागारोपवनकुंजरतुरंगनटनर्त्तकशालापालकपरिजनाध्यक्षो धनद इव जनवेतनादानदक्षः सकललोकविख्यातसख्यः सखोपंडित स्तत्रैवं प्रत्युत्तरयांचकार । स्वामिन् अय मिदानीं कविकर्मकुर्वाणों दृष्टः स्पष्ट मेतस्य पिता मार्केडेयाहिवंतादिसप्तपर्वताध्यक्षता मविरतं वितन्यमानो गंभीरराय इत्याभिधाप्रसिद्धः स्वामिभिः कदाचिन्नयनपथं नीतो भविष्यति । एतस्यापि महद्भाग्य मिदानीं यतः सकलमहीमंडलाखंडलेन महाराजेनात्मीयजनमध्ये गणितः । ततो लोलिंबकर्मकरोल्लंबौ रघुनाथलक्ष्मणौ रघुनाथलक्ष्मणाविव परस्परोपमेयविहितसंरभावप्यस्य श्रीमद्दत्तोनागनाथपंडितैः सह संबंधसख्यं आचख्यतुः । राजा किमुच्यते तर्हि अयं अस्माकमेव विद्यते इत्यवोचत् । तत स्तदास्थानमंडपकांडपटनिकटदत्तपट्टकुटिकधाटिकः कंटककणपुटतटं रटनपटुघटिकाष्टक मवादयत् । तत स्तेभ्यः सभास्तारेभ्य स्तांबूलं दापयित्वांतःपुर मगमत् ॥ श्रीः ॥

॥ इति श्रीमज्जयरामकविविरचिते राधामाधवविलासे चंपूकाव्ये राजदर्शनसमस्यापूरणं नाम षष्ठोल्लासः ॥ ६ ॥

---

## सप्तमोल्लासः

प्रात स्तत्सभागगनविभावसुदधिमधुघृतलाजापुष्पाक्षतोदुंबराश्वत्थमुक्तामणिछत्रदूर्वांकुराशादर्शकन्याध्वजाष्टापदाक्षा नृपः श्रीतरु भद्रपीठानि सस्यानि मच्छा हया हंसचाषौ वृषः केसरी दक्षिणावर्त्तशंखांबुसिद्धार्थका रोचना स्वस्तिकं तोरणं कीचका वेणवः ।

वरुणमधुमदाक्तगंडो गजः तोयलंबोंबुदः पूर्णकुंभोद्रि रिंद्रः फलान्यामभांसं सितं चामरं गौः सवत्सांगना पुत्रिणी मानुषं वर्धमानं नराणां सहस्रं प्रयुक्तानि यानानि धन्वंतरि र्वामनो ब्राह्मणो भूमि रभ्युद्धता सिद्ध मन्त्र वराह श्च तोयोत्थितः ।

त्रिनयनमधुसूदनस्कंदपद्मासना लोकपालाः सुराः खं दिशोग्निः सरांसि स्रवंत्यो मखा मारुतो ज्योतिषं धर्मशास्त्रामृतं वालखिल्यादयो वेदवाक्यं निधिः कौस्तुभः कांचनं माणिभद्रः प्रियंगुःप्रमोदो वचामोदकौ ।

दिति रदिति ररुंधति बुद्धिसाविग्युमाकाशगंगा शची देवसेना सुधा शांतिलक्ष्म्याक्षमाला सरस्वत्यलंस्वस्तिशब्दो वषट्कार ॐकारपुण्याह-धर्मक्रिया श्चैतदष्टोत्तरं मंगलानां शतं दर्शनात् स्पर्शनात् कीर्तना च्चाशु-भानि व्यपोह्यार्थसिद्धिं दिशत्युत्तमां ॥ २२४ ॥

इति विश्वनाथभट्टभाणितं प्रातःस्मरणं आकर्ण्य उदतिष्टत् । ततो घृत-तैलभृतरजतकनकभाजनद्वयभाषाभूषितभुजद्वयो द्विज स्तस्य भूभुजः रक्तराजीवजीवकृन्नयनराजीवराजितं वदनेंदुबिंबं कविभिः संपूर्णनिशाक-रेण तुलनीयं किंचित्स्पर्शित मिति स्नापयितुकाम मिव तस्मिन् बिंबयां-बभूव । ततो विततसहस्त्ररश्मा वपि हिमकरकररुचिरतरछाये अछाछ-मछकछपचित्रातिरस्करिण्यापटीवस्त्राविस्तीर्णास्तरणे नवगजवाहितेति नव-गजीनामधेयधारके सकलमहीपालदूतैः पूर्वमध्यासिते अनेकक्षत्रियकुल-संकुले नक्षत्रनाथसनाथछत्रछायांतरितकायः वेत्रलताधरशतसमुत्सारित-दूरजनपदसमुदायैः ललितकरकमलकलितकरवालकोटिविन्यासेनागमनेन च वसुंधराचरणशरणी मिवाश्वासयन् आस्थानमंडपे पंडितकविमंडलीमंडितो-द्दंडजनदंडवत्प्रतितांडव मवलोक्यानंतानुकरणकोविदभुजधृतभूभारभारा-तिशयेनेव व्यापितदिगन्तरैः नरसिंहावतारै रिव स्तंभाविर्भावितशरीरै मृगराजै रुह्यमानासने स धरणीपाकशासनः समुपविशति स्म । अत्रांत-रेपि द्विजराजेपि महीसुराणां निजतपःपीयूषदानेन प्रभां करोतीति प्रभा-कराभिधान मादधानः गुरु रस्य धराणिपुरंदरस्य स्वस्य चरणतीर्थामृत-वर्षेण नरपतिजनपदजनितपुण्यशस्यान्यतिशयेन संवर्द्धयामास । राजा पुरतो गत्वा वहुमानपुरःसरं समानीय स्वस्य वर्षपौरोहित्यं यथापूर्वं कार-यामास । तथा तेपु प्रभाकरभट्टगुरुवर्येषु स्वस्य पौरोहित्यं च विधिवच्चा-लयत्सु सत्सु केचन तिरुचनापल्ली मल्लीनाथान्वयजातपंडिताः कटकवासेन मासमेकं निरंतरप्रयाणप्रसंगा दलब्धराजदर्शना स्तं कविकर्मकोविदमिति निवेदयामासुः । भोः कवीश्वरा एकं पद्यं अस्मद्विषये विधाय दीयते चेत् तेन प्रभाकरगुरुः संतोषं प्राप्य राजदर्शन मस्माकं करिष्यति । तत स्तेभ्यः श्लोकद्वयं विधायादात् । यथा ।

विकास माप्नोति सहस्त्रपत्रं प्रभाकरो यत्र न तत्र चित्रं ॥
तदद्य चित्रं प्रविलोक्यते यद्द्वित्राणि पत्राणि यथातथैव ॥२२५॥
आकर्णय नयवचनं वदनं द्विजराज ते द्विजा मुख्याः ॥
तान्न विचालय सहसा ये तव महसा गमिष्यता मरं ॥ २२६ ॥

॥ श्रीः ॥ ॥ इतिश्रीजयरामकविरचिते राधामाधवविलासे चंपूकाव्ये राजसभावर्णनं नाम सप्तमोल्लासः

## अष्टमोल्लासः



पुनरपरस्मिन् दिवसे यथापूर्व मुपविशति सति राजनि शस्त्रमार्जक तैलधावितां रत्नखचितमुष्टिमंजुलां पार्श्ववर्तिभृत्यपाणिगृहीतां कृपाणिका मवलोकितुं विकोशां कुर्वाणे सति स कवि र्वर्णयामास ।

यथामति मया विभो तव कृपाणिकायाः स्तुतिं
विधाय विनिगच्छते सदसि सत्कवीनां पुरः ॥
परीक्षणविचक्षणक्षितितलैकसंरक्षण
क्षणं ललितलक्षणश्रवण मत्र संदीयतां ॥ २२७ ॥

राजा सादरं तच्छ्रुतवान् । यथा ।

नृप तव कृपाणिकेयं दृढतरकरपीडनेन संभ्रांता ।
अपहृतकोशा भृत्यै र्निपतति परिधृत्य वैरिणां कंठे ॥ २२८ ॥

नृप तव कृपाणिकायाः प्रायः सा...नी छाया ॥
अनया निकृत्तशत्रू ननुकृंतति सापि तत्र पत्रस्थान् ॥ २२९ ॥
हस्तोदितो विचित्रः शाहमहीपाल खड्गमेघ स्ते ॥
वर्षति यत्र हि धारां कुरुते तत्रैव जीवजीवनाभावं ॥ २३० ॥
आश्चर्यं तव शाहक्षितीश दृष्टं कृपाणजलदस्य ॥
वृष्टिं विनैव कुरुते य स्तृणसृष्टिं प्रतीपरदनेषु ॥ २३१ ॥
अवलोकितं श्रुतं वा कैरपि चलनं जलस्य जलपुरतः ॥
नृप तव कृपाणनीराद् गच्छति नीरं परस्य वदनस्थं ॥ २३२ ॥
कृष्णा कापि कृपाणी राजन्नाजौ विलक्षला जयति ॥
हरति पररक्तवस्त्रं स्वीयेनाच्छाद्य कालेन ॥ २३३ ॥
श्रीमान् महाप्रयागः पुष्करकलिता कालिंदजा यस्मिन् ॥
भूभृन्मौलिषु ललिता सूते चित्रं सरस्वतीं गंगां ॥ २३४ ॥
अलमलमधुना शाहक्षितीश युद्धे कृपाणनुति र्भियः ॥
तृणमप्यरिदंतधृतं विलोक्य निलयान्निःसरति ॥ २३५ ॥

एवमादीन्यन्येषामपि महाकवीनां खड्गवर्णनान्याकर्ण्य किमपि विविदिषु रिवान्यत्राकृष्टदृष्टि रभवत् । तावन्नर्त्तनशिक्षाविचक्षणं धावनचतुरं तुरग मारुह्याश्वसादी सविनय मेव मवादीत् । महाराज महानेतस्य जवः संपादितः केनाप्यश्वेनानेन साकं धावितुं न शक्यते । तावद्राजान माभिमुखीकृत्य स कवि स्तदश्ववर्णनं श्रावयामास ।

शाहराज तवाश्वोयं जवाधिक्ये सुशिक्षितः ॥
तथैव वैरितुरगैः पश्चादेव विमुच्यते ॥ २३६ ॥

राजा तदश्ववर्णन माकर्ण्यैवमवदत् । कवे त्वं अमुमश्वं आरुह्य खड्गं चैमं बधान विजययात्रासमये मया सहैव स्थेयं । ततः प्रस्थानदुंदुभि रभवत् । तद् दुंदुभिवर्णनं गोपाचलीयभाषाविहितमिति संस्कृते न लिखितं । ततः सेनासन्नाहः समजायत । तं विलोक्य वर्णयामास ।

मच्छद्वयेन सेना तव मीनाक्षी विलक्षणा जयति ॥
स्वीयोरजोविशेषं रचयति परेषु सात्त्विकं भावं ॥ २३७ ॥

तावच्छत्रुभि र्लोकालोक मप्युल्लंघ्य गतामिति चारा महाराज मुपगम्य कथयामासुः । स कवि स्त मुदंत माकर्ण्य वर्णयामास । यथा ।

न विधेयो नृप शाह त्वया स्वदुर्गे प्रतापविश्वासो ॥
लोकालोकात्परतः प्रभया रिपवः पलायिता स्तेन ॥ २३८ ॥

ततो राजा मृगयाव्याजाद् गव्यूतिमात्रं यात्रा मकरोत् । तत्र मार्गकाननेष्वाकर्णविततााननशुनकै रुद्घाटितनेत्रापिधानकोज्जृंभिततरक्षुशार्दूलगंधैः कुंजरबृंहितैः स्तुरंगहेषारवैश्च तुरंगकोलाहलै र्विद्रावितवनमाहिषमृगवराहखड्गाच्छभल्लभल्लकगोमायुशशमर्कटकसमूहानुधावमानविकटघोटवाटाविटपिविटपटकंटकाकृष्टशिरोवेष्टनपटपाटनेन भीषणभटावलोकमाना अतिभीतपटुजालगतकालमृगशृंगसंकर्षणतया च नीलांबरपरिकलितकलेवरतया च हलेन यमुनाजलकर्षणसंकर्षण मनुकुर्वाणेन मृगयुना निवेदितमृगः निजवहनपरिश्रांतवैनतेयाय विष्वक्सेन इव श्येनाय दत्तपंचशावलंबः ससंभ्रमं बंभ्रमित्वा यावदायात्यत्रांतरे रात्रिमुखमभवत् । तावदेकस्मिन् प्रदेशे पर्वतदरीदरीदृश्यमानं खद्योतवद् विद्योतकुशलं किमपि तृणविशेष मपश्यत् । स कविस्तृणं वर्णयामास । यथा ।

तव प्रतापेन जितं यदेतत् । तेजो रिपूणां कुशकाशवृत्ति ॥
खद्योतवत् तद्यवसे निशायां । विद्योतते शाह इति प्रतीमः॥२३९॥

शाहसैनिकजनेन दुर्जनाः । कंदरांतरचराश्च मारिताः ॥
तत्र गाढतमसःप्रशांतये । दीपितं तृण मिदं विलोक्यते ॥२४०॥

तत इतस्ततः परावृत्य प्रस्थानमंडप मगमत् । तदनु कतिपयदिवसैः श्रावणपौर्णमास्यां रक्षाबंधनोत्सवाय सर्वेप्याजग्मुः । तत्र रक्षाबंधनभूषितं राजभुजभुजंगं( वर्णयामास )

शेषादप्यधिकतरं तव भुजभुजंगेन पंचशीर्षेण ॥
विधृता स्थिरेति हर्षाद्वर्षासु किल निबध्यते रक्षा ॥ २४१ ॥

निजामशाहसहितं धृतं राजन्यकं करे ॥
मन्ये रक्षापदेशेन तस्य छत्रं विराजते ॥ २४२ ॥

वर्षासु गतपर्णानि पंकजानि रमाकरं ॥
मन्ये रक्षापदेशेन सेवंते देव ते करं ॥ २४३ ॥

अथ कदाचित् समुद्रतीरपर्वतवासिभि र्द्विषद्भिः कटकमार्गावरोधं विधाय स्थीयत इति श्रुत्वा राज्ञा तेषा मुपरि प्रेषिताऽपूर्वा सेना तद्रिपुशिरांसि सहस्रश आनीय निवेदयामास । राजा प्रतिग्रामं वृक्षेषु तानि बंधनीयानीत्यादिदेश । तत्र

विश्वामित्रादधिकं चित्रं तव शाह विश्वमित्रत्वं ॥
यद्रिपुमस्तकनिकरै स्तरवः सर्वेपि नारिकेरंति ॥ २४४ ॥

तत स्तस्मिन् प्रसंगे सर्वैरपि महाकविभि र्महाराजकीर्त्तिवर्णन मकारि । तत्रानेन कविनाप्येवमुक्तं ।

लोकत्रयापणेस्मिन् कीर्त्या तव शाह पश्यतोहरया ॥
सौवर्णालंकारा दर्शनमात्रेण रौप्यतां नीताः ॥ २४५ ॥

एवं कियत्यपि समये दक्षिणदेशप्रेषितः सेनापतिः पुरंदराख्यं महापर्वतं अमित्रेभ्यः सगृह्य तन्मस्तके स्वभृत्यान्निधाय राजानं कथयामास । यथा ।

पौरंदरं यः पदमात्र मिच्छं श्चकार धर्मांबरराजसेवां ॥
ततोधिकं त्वां नृप शाह मन्ये तन्मौलिसंस्थापितभृत्यवर्गं ॥२४६॥

ततः कतिपयदिवसै र्विद्यानगरकनकगिरिग्रहणं विधाय तत्रत्यो नृपतिः पलाय्य यमगुडाख्यं पर्वत माश्रित्य तिष्ठतीति कथयितुं सैनिकाः समाययुः । ततो राज्ञा रामेण हनुमानिव प्रेषितपूर्वो भीमरायाख्यो दूतः सत्वरं प्रथम मागत्य तत्रत्य मुदंतं अकथयत् । स कवि स्तदेवं श्लोकसंदर्भेणोत्तरप्रत्युत्तर मुत्तरयांचकार । यथा ।

नरपति रय मागतोऽस्ति दातुं कनकगिरेः कनकं धरासुरेभ्यः ॥
परिहर सहसा किरातसंगं भव भव तत्पदपद्मरागपीठं ॥ २४७ ॥

गिरि रुवाच

न्हेपितोस्ति सनलोपि यन्मया पश्य तस्य कविनापि वर्णितं ॥
स्वर्णमल्पमपि लभ्यमस्ति ते गच्छ रे न कुरु साहसं वृथा ॥ २४८ ॥

स नलो न भवामि यस्त्वया हृतगर्वः खलु खर्वतां गतः ॥
अनलोस्मि महान् प्रतापजो नृपशाहध्वजमारुतेरितः ॥ २४९ ॥

ततो लोकोक्तिः ।

बहुविधयजनानि यस्य हेतोः क्रकचवधं विबुधै रनुष्ठितानि ॥
कनकगिरिरयं प्रतापयंत्रै र्हतपरिधिः सुलभोभवज्जनानां ॥ २५० ॥

वितरति कनकं यद्ध्मातमात्रांतरःसन् कनकगिरिरिदानीं दृश्यतेसौ जनेन॥
परकृत मसहत्वा दागतोसौ नलः किं कलहमिह विधातुं त्वत्प्रतापानलेन ॥
॥ २५१ ॥

नलप्रतापानलयो र्नियुद्धे मन्ये जितः पूर्वपदाभिधानं ॥
पलायनं वाभ्यासितुं निलीन स्तवारिनारीजठरे जवेन ॥ २५२ ॥
मन्ये प्रतापः कुशलो न केवलं राजन् कृपाणोपि तवास्ति तादृशः ॥
येनाक्षतोसा वुडुविस्तवाहितो नीतः शरीरेण यमालयं प्रति ॥२५३॥

ततः कस्मिंश्चिद्दिवसे खड्गविद्याविशारदा वाकंटखेटकाभ्या मुभावप्यावृत्तौ कृत्रिम मयुध्येतां । तत उभाभ्यामपि खड्ग मुत्सृज्य बाहुयुद्धं चक्रे । इतः सदसि पंडितद्वयं शास्त्रचर्चायां लौकिक माश्रित्य पटदानेना युध्यत । राजा सास्मितं कवि मपश्यत् । स कवि र्विदूषकविहितोपहास मिति राज्ञः स्मितेन निश्चित्योद्गारयामास ।

नियुद्धगालियुद्धाभ्यां शूरो वा पंडितो गुरुः ॥
इति पृष्टः कवि र्ब्रूते भट्टाद् भट इति स्फुटं ॥ २५४ ॥

ततः केनचित् कविना गोवर्द्धनाचार्यकृत मार्याप्रबंधं स राजवर्योऽश्रावि । तत्र राज्ञोनुरागं विज्ञाय तद्रीत्या कानिचित् पद्यान्यनेनापि कविना विरचितानि । यथा ।

हिंसा माभूदिति चेत् सुंदर सर्वज्ञ गम्यतां कूपात् ॥
जल माहर्त्तु बाला वालकगलबंधनं तनुते ॥ २५५ ॥
संमार्ज्य भुव मपूर्वा भूषयति रंगमालया बाला ॥
उप्तं तया नु मन्ये मन्मथदेहोद्भवं भस्म ॥ २५६ ॥
दीपे तैलक्षेपव्याजेन तथाऽदार्शि यद्वदनं ॥
तत्कुरुते मम कदनं मानससदनांधकारेपि ॥ २५७ ॥
उदयति ननु हिमभानौ मुकुलति सकलं कमलवनं सुभ्रु ॥
तव वदनेन मदीयं विकसति नेत्रद्वयं चित्रं ॥ २५८ ॥
उपपतिमुपगंतुमना न मनागपि गमनसमय मुपलेभे ॥
किमपि मिषेण मृगाक्षी जागरयति यामिकं दिवसे ॥ २५९ ॥

कृतमप्यकृतं कृत्वा किंचित् जघनांतराळ मुपवसनं ॥
तक्रं विक्रीणीते गोपी दुग्धमिव विदाधेषु ॥ २६० ॥
कार्यव्यापृत एषः स्नुषाजन स्तव किमंब सच्चरिते ॥
नहि नहि सुताजनोयं तत् श्वश्रूभाग्यमधिकं ॥ २६१ ॥

एवमेकस्मिन् दिवसे पटमंडपस्थितो राजा राकारजनीकरं सकलंकं विलोक्य वर्णयत इत्यादिदेश । स कविः ।

एकेन लक्षणेन हि लक्षित इंदु र्विनिंद्यते विश्वैः ॥
द्वात्रिंशल्लक्षणकं शाहनृप त्वां स्तुवंति तच्चित्रं ॥ २५२ ॥
सकलकलावाननिशं कविबुधगुरुभिवद्दर्शनानंदी ॥
मृगपतिचिह्नितवाहः क्षितिपतिः शास्तु चित्रचंद्रोयं ॥ २६३ ॥

अथ कदाचित् कोशाधिकारिणा प्रत्यहं दीयमाने वराहे केनचित् प्रतिबंधेन द्वित्रिदिनं न दीयमाने सति तमुद्दिश्यैवमुक्तवान् ।
काव्याटवीं पर्यटत स्त्वदीयां कवे र्मृगेंद्रस्य गजेंद्रलाभः ॥
तस्या मकस्मान् मम शाह कस्मान्नित्यं वराहोप्यतिदुर्लभोभूत् ॥२६४॥
ततः कस्मिंश्चित् प्रावृट्समये दुर्दिन मुद्दिश्य स कवि रेवं वर्णयति स्म ।

यस्यां मच्छकलाधरः स्फुट इनः श्रीमानपंकावनी
सानंदं निगदंति मंजुलगिरं भूदेवहंसा इमे ॥
वृष्टिः स्वर्णमयी भवत्यविरतं पद्मावनं जीवनं
चित्रा प्रावृडियं सभा विजयते श्रीशाहराजं स्तव ॥ २६५ ॥

॥ श्रीः ॥ इतिश्रीमज्जयरामकविविरचिते राधामाधवविलासे चंपूकाव्ये राजरीतिवर्णनं नामाष्टमोल्लासः ॥ ८ ॥

---

## नवमोल्लासः



ततः कतिपयदिवसै र्युवराज्यराज्यभारार्णवनौकर्णधारो वसिष्ठ इव वसिष्ठकर्मानुष्ठानवरिष्ठो व्यास इव वेदवर्णविवरणनिपुणो वाल्मीकि रिव कविकर्मानंदितहृदयः सकलशास्त्रार्थतत्वज्ञानसंपन्नो विपन्नजनाभयदानविहितकारुण्योग्रणी रग्निहोत्रकुशलानांपरदार परद्रव्यपरद्रोहपरा ङ्मुख इति

पवित्रतया गंगयाप्याधारभूतयावृत इत्याधाराधेययो रभेदे गंगाधर इति विख्यातनामधेयोमात्यो बभूव । तेन कदाचित् श्रीमच्छिवरायवदनारविंदा देतदीयराजदर्शनादिप्रसंग माकर्ण्य तूर्णं मद्दर्शनायानेय इत्यवादीत् । तत स्तैः कारितदर्शनः स कवि र्नवीनामात्यपदवीगरीयस स्तस्य मुद्राम-वलोक्य श्लोकेनैकेन वर्णयामास । यथा ।

महाराजार्णवोत्पन्न एकः पूर्णकलाधरः ॥
मौलौ गंगाधरस्येव श्रीभरो यस्य राजते ॥ २६६ ॥

ततः स सचिववर स्तदुत्तमश्लोकस्य स्वकीयसमुद्रवलयांकितवसुंधरा-शासनमुद्रा मासनायोपकल्पयामास । तत स्तद्गंगाधरपंडितवरस्य तास्मिन् कवीश्वरे भूयान् पक्षपातः समजायत । ततः कतिपयदिवसै श्चंद्रग्रहण-समये तेनैकराजेन द्विजराजाय गजराजो दानजललुलितकरो दानजललु-लितकरेणादायि तद्वर्णयति कविः ।

उदयाचलराहुनाशिते द्विजराजे यशसा विराजितः ॥
अकरोदपरं गजोपरि द्विजराजं भुवनैकभूपतिः ॥ २६७ ॥

ततः कतिपयदिवसै स्तेन युवराजधुरंधरेणाभिनवकालिदासकविता-लालित्यशालिधारापरिवृढापरावतारेण देशभाषाश्लेषकाव्यलक्षणभाषण-विचक्षणेन प्रचंडपंडितमंडलीपुंडरीकचंडभानुना द्वादशभाषाविरचितराधा-माधवविलासशुश्रूषुणा स कवि र्बहुमानपुरःसरमाहूय सरसहासरसदरविक-सितवदनारविंदं स प्रवंधः श्रवणपथातिथितां नीतः । ततः केनचित् कविना नृपसन्निधौ प्राचीनमेवैकं पद्य मपाठि ।

गुरु रेकः कवि रेकः सदसि मघोनः कलाधरोप्येकः ॥
अद्भुत मत्र सभायां गुरवः कवयः कलाधराः सर्वे ॥ २६८ ॥

तत्रानेन कविनोत्तरार्द्ध मेवं विधाय कृष्णभट्टाविदूषकमुखेन स युवराजः श्रावितः । यथा ।

अद्भुत मत्र सभाया मेते बह्वः क्षमापति स्त्वेकः ॥ २६९ ॥

ततः कस्मिंश्चिद्दिवसे बघेलनृपतेः कवीश्वरवरेण राजसन्निधौ स्वकीय-नरपते रौदार्य मेव मुदीर्णं ।

अघे लघुतरारंभो बघेल मुपसर्पति ॥
पुत्रवान् धनवां श्चैव जायते चारुज स्तथा ॥ २७० ॥

अत्रानेन कविनोत्तरार्द्धयमकं ॥

\+ + + + + + + + + +॥

\+ + + + + + + + + ॥ २७१ ॥

तत स्तस्मै सकलकविकुलश्लाघनीयाय स्वकीयकर्णभूषणादिनानालंकार- वस्त्रभूषिताय पारितोषिकव्याजेन एकमेवाद्वितियं ब्रह्मेति उपासनया एकोजनार्दनपंडित मिवानुकुर्वाणं हरिहरभेदभावनाराहिततया हरिहर- दिवसोपवासानिरंतरं हरिहरकथाश्रवणान्नदानाविख्यातवैभवं मनोहरशरीर- विभवतया नारायणतनुसंभव मादधानं जनार्दनपंडितं प्रतिवर्षं वराह- शतसहस्रकं देयमित्यादिदेश । ततः कतिपयदिवसैः सवाईमहाराजेति तं युवराजधुरंधरं पितुरप्यधिकतरं वसुंधरायां जयंतं जनकमिव जनकस्य जनपदपालकं जनो जानाति स्म । स कवि स्तेन राज्ञा स्वकीयाज्ञापालन- प्रतिज्ञाशालिने दिनमाणिमाणि रिव रमणीयगुणविशेषतया सकलजन- करग्रहणकुशलाय द्विजराजकार्यकोविदतया निजपरिपोषककमलाकरकोशी- करणनिपुणाय उत्तमकर्मानुष्ठानजनितयशोधनलुब्धाय यशवंतरायनाम्ने राजकार्याकार्यकरजनकर्मनिरीक्षणविचक्षणाय मंत्रिमुख्यायैवमाख्यातं । अयं कवीश्वरः सर्वविषये समृद्धिभाग् भवति तथा भवद्भि र्भवितव्यं ॥

॥ श्रीः ॥

॥ इति श्रीमज्जयरामकविविरचिते राधामाधवविलासे युवराज्यावाप्ति र्नाम नवमोल्लासः ॥ ९ ॥

---

## दशमोल्लासः

॥ श्रीः ॥

तदनु स कवि स्तेन सवाईमहाराजेन, सर्वाभीष्टप्रदायके, कैलासशैल- प्रतिमल्लशृंगमंडले, यः संततविततशीतभयेनेव प्रावृताभ्रशुभ्रकंबलः , यं अनंतस्तंभ इत्यवलोकयति लोकः , येन जगद्गुरुप्येककंदरस्थापितः , यस्मै परमगुरवे विद्याधरधराधराधरायांतेवासिनः सर्वे पर्वता श्चरणप्रणता इव दृश्यंते , यस्माज्जह्नो रिवोदरात् संक्रांतपूर्वा भागीरथी संक्रांतिदिवस एव निःसरति , यस्य तीर्थजलान्निमज्जनाद् द्विजन्मादि रेकवारमपि जन्म नाप्नोति , यस्मिन्नारूढजननयनस्याधःस्थिता अन्ये पर्वताः कुंजरंति ,

कुंजरा अप्युंदुरंति , भिल्लादयोपि पिपीलिकायंते , कणादकपिलागस्त्यामि-
त्रमुद्गलपराशरादिविविधतीर्थजलोक्षणमात्रदूरीकृतसकलजनकल्मषे , क्ष्माम-
डामरादतिराहित्यमहितमहितमहीविलासे , यतिजनानियतसेवितकंदरशत-
गर्भमंदिरे, कंठीरवशार्दूलाच्छभल्लभल्लूकाध्यासितदरीपरीसरसरीसृपौकसा-
कनिर्मोकभीषणाधित्यकाधिष्ठितमहर्षिगणे , कमलकुवलयललितदळकल्लोल-
वेल्लितकलहंसकारंडकचक्रवाकबककूजितकमनीयकासारसहस्रोपशोभिते ,
वलीमुखवल्गितपल्लवलास्यकल्पतरुतुल्यमहीरुहसंकुलालये , बकुलमालती-
पाटलकेतकीकुसुमविकाससौरभोद्भासितोपवनपवने , श्रीशैलशकलाभिधेये
ककुदचलवरे तस्मि न्निंद्रादिकवृंदारकवृंदवंदितचरणारविंदयुगलः , सेवा-
समयसमुत्सुकभुजगराजफणामाणिक्यमयूखमंडितमडपमंडलः , मंगलनी-
राजनसमयसमागतसरससंगीतनाट्यविद्याविशारदरंभोर्वशिप्रमुखदेवांगना-
संदोहसंदेहदवारविलासिनीनिचयसंसेवितनानादिगंतवास्तव्यनरेंद्रावि—-
रचितैककदिवसोत्सवसमुचितकिरीटादिभूषणसंचयः , अंगवंगकलिंगमाग-
धमहाराष्ट्रादिदेशेभ्यः प्रार्थनया समागतनरनारीसमूहसमानीतवैडूर्य-
वज्रगारुडनीलपद्मरागप्रवालमौक्तिकादिकमणिनिचयोपहारसमुचितपदपद्म-
पर्यंतभागः , पंचामृताभिषेकसमयसमीक्षककरसंख्याविद्वणनिगादितचतु-
र्वेदघोषपूरितगर्भमंदिरः , प्रतिदिनविद्वज्जनपठिततत्तत्कालसमुचितमहाभा-
रतादिपुराणकथाप्रसंगशोभितसन्निधिदेशः , श्रीमच्छिवगंगाधरेश्वरो वर्त्तते।
तत्सन्निधौ सारासारविचारपाराशरीयनारायणसूरिसम्मतमहाभारतपाराय-
णप्रयोजनव्याजात् श्रीमद्गंगाधरस्वर्णांबिकावर्णन मेवं कर्त्तु मादिष्टः । तत्र
तेन कविना सकलसमृद्धिशालिना पुष्टाः स्वकीया गावः भगवदभिषेकार्थ
मिव पद्यामृतानि दुग्धाः । तानि पद्यामृतानि संस्कृतसंदर्भे लिखितु मयुक्त
मिति प्रकरणप्रसंगादग्रे लिख्यंते । तत स्तेन कविना महाभारतपारायणं
कुर्वता पुराणपुरुषवचनादित्याकर्णितं । अहो त्यदेतत् स्थलं महारोगकृद्
भवति । अत्र दैवाद् विपन्नस्य जनस्यार्द्धांगमेव गच्छति । स च जरासंध
इव विगतार्द्धांगया निर्जरया कयाचिदुपसंयुज्यते । पुन स्तच्छरीरं रज्जुभि
रिव महाभुजगै र्विनिर्बध्यते । तद्भुजंगमसंगमादिव कालकूटं तत्कंठे स्फुटता
मेति । पुन स्तच्छरीरं गलगतगरलज्वालाकुलभालैकदेशं मौलौ जलमाव-
हति । पुनरपि तद्विग्रहः जलकुंभान्मुनितरु रिव शिंबीजटाजालप्रतिपच्चंद्र-
कोरककलितमौलिभागः समुज्जृंभते । पुन स्तच्छरीरं विगतजीवभावतया
अपहृतवस्त्र मिव दिगंबरत्वं प्राप्य, अयं च भूतोद्भूतमहाभूतावेशितं पिशाचैः
सह भस्मलुलितकलेवरतया स्मशान एव परिधमतीत्याकर्ण्य , भीतेनैव
क्षणं स्थित्वा स्वागत मेवं विचारयितु प्रचक्रमे । अहो निंद्यतरस्यैतच्छरी-

रस्यैतादृशी चेद्गति स्तर्हि समीचीनमेव । परंतु तस्य कंठगतं गरलं यत् तदेवैक मसह्य मित्यनुमीयते । तदर्थमेकं रसायन मुपकल्पनीय मिति निश्चित्य तेन कविधुरंधरेण जरामरणभयराहितशरीरं विधित्सुना श्रीमद्राधामाधवविलासाख्यसंस्कृतचंपूकाव्यरसायनं तादिदानी माभिनिर्मितं । यद्गरुडेनाकुंठगतिना वैकुंठपीठादानीत ममरतरुमूल मनंतभोगपरिभावितबलाभिरामगुणगरिष्ठं , यस्य नामाप्येकवारमप्याकर्णितं चेत् सर्वेपि शरीरभवरोगाः पलाय्यैव गच्छंति , यत्संशोधितांतःकरणकलुषभावतया संसेव्यमान मतिसुखदं, यस्यार्द्धमात्रयापि माता पुत्र इव त्रिभुवनं संजीविष्यते इत्येतत् शास्त्रानुभवसिद्धं , यत् श्रीमद्धरिवंशसाहितमहाभारतश्रवणसंतुष्टश्रीमच्छिवगंगाधरेश्वरश्लाघांदोलितमौलिसमुचलनललितकल्लोलगंगा—जलप्रवाहसहस्रेणेव वाग्विलासेन पूरितं, तत्सुवर्णघटितचंपूगर्भोल्लासितरसमधुरिमधुरंधुरं एतादिदानीं भवता श्रावितं । ततः पुनरपि स रसिकजनसमाज स्तं प्रबंधपाठकं पप्रच्छ । अहो प्रबंधपाठका भवतां प्रसादादसौ संस्कृतराधामाधवविलास श्चतुर्विधपुरुषार्थफलदायकोस्माकमपि संवृत्तः । तथैव द्वादशभाषाविरचितराधामाधवविलासः श्रीमन्महाराजेन भवन्मुखांभोजाद् यद्वत् श्रुतः तद्वदस्माकमपि श्रोतुं मानस मुत्कंठते तर्हि सोपि गेयो भवति भवद्भिरिति । ततः स प्रबंधपाठक स्तमेव पूर्वकथानुसंधानेन तं प्रबंधं तेभ्यः श्रावयामास । प्रबंधपाठक उवाच । यथा ।

\+ + + + + + +

\+ + + + + + +

ततः कदाचिज्जू जगाद्विजयार्थं प्रस्थितः स सवाईमहाराजः मणिमयमंडितसिंहासने स्वकीयप्रतिबिंबमिव सर्वावयवसारूप्यतां धारयंतं शाहराजनयनद्वयमिव वामदक्षिणभापःपवादानिराकरणाय भ्रुकुटिछलां तुला मध्यारूढं अद्वितीयस्यैकराजस्यैष एव द्वितीयता माकलयंतं महाकुलसमुद्भवमपि नकुलरूपविभवशोभमानं माधवमिव मधोः शत्रुघ्नमिव रघुनाथस्य सकलकलाकुशलेभ्यः श्रीमद्विश्वनाथज्योतिर्विद्भ्याभ्यस्तसमस्तविद्याकलापं नरषट्कशरीरबलप्रतिमल्लतया ज्योतिष्ठमिति नरषकट्साजेठिमल्लनाधिष्ठितपार्श्वभागं तथाहि व्यायामे धनुराकर्षणे चललक्ष्यभेदने कुंजरारोहणे नृत्यचतुरतुरंगाशिक्षायां काव्यनाटकाख्यायिकेतिहाससंगीतशास्त्रनानादेशभाषापरिज्ञाने वीणामृदंगवादनाविषये गायने पुराणाकर्णने विनये गुरुजनसेवने चात्यंतंकुशलं कोयाजिराजाभिधानं युवराजं विधाय निजपदपीठाधिदैवतसपर्यार्थमिवोपकल्पितवान् । ततः स कदाचित् तेन सवाईमहाराजानुजेन गुणिजनगीततत्कविकृतचंपूचमत्कारचंद्रचकोरेण महाराजदत्तसमस्याप्रक-

रणं शृण्वता विकुंठितकंठीरवकंठरवेणापि कलकंठकंठमंजुलं निजपूर्वज-नृत्यशालामालानायकमणिरमणीयगुणगरीयसीमिति नायिकानामोपशो-भितां चतुर्भुजकृष्णगोपालेन नटनायकचतुरस्त्रगायननर्त्तनादिसुलूनेरिनड-नेरिवर्द्धमानतिरुमुरूरीठमूरूहावभावतंडभेदभ्रमरीसंवत्रयरेखामुद्राप्रमाण—नोद्रनीह्वैलगुंडलिचित्रविचित्रचिंदध्वाडधरध्रुवपदप्रस्तारविस्तारितनामा-वलीलालित्यविलोकनसंतुष्टतरधरणिपुरंदरवरलब्धैकक्षोणीपालतिलकपति—परिचर्यावशीकरणगतामिवोर्वशीं सौविद्लशतसंवृतमणिमयमंडपरंगभूपरि-सरतांडवलास्यपांडित्यनटनटीमुकुटकोटिमणिमंजरीकिरणपिंजरणं चरणयो रपरमंजीरभ्रमतां आदधानां पितुरप्यधिकतरं निजगुरुं सेवमानां निजां तनूजा मिव मन्वाना राजानिर्देशेनेदं चंपूकाव्यं पाठयंत स्ते कवीश्वराः साविनयं समाहूय प्रत्युत्थानादिनानामानपुरःसर मिति पृष्टाः । कुत्र स्थीयते, किं क्रियते, किं वा पाठ्यते, किं चेदानीं पठ्यते, किमित्यत्र नागम्यते इति । कवयः । भवद्भि र्यथा स्थापिता स्तथा तिष्ठामः । तथापि । प्रातःस्नानं संध्याहोमदेवार्चन मध्यापनं च विधाय पंचदशघटि-कानंतरं पंचदशप्रकरणानि कानिचित् पठित्वा तन्मननपुरःसरं राजनिर्दि-ष्टनर्त्तनशालाबालिकाः पाठ्यंते । कुमारीनर्त्तनाध्यापन मतिकठिनं भवंत स्तदपि जानंति । कविः ।

ब्रह्मणापि निजकल्पकोटिभिः शक्यते न कविकर्म निर्मितुं ॥
कारुकैरपि न किं विधीयते दारुयोषिदपि चारुनर्त्तकी ॥ २७२ ॥

ततो महाभारतनित्यपुराणाकर्णनानंतरं गुणिजनगायनप्रसंगे पुनर-प्येव मवदन् । श्रीमन्महाराजेन भवद्भिरचितचंपूमध्ये संस्कृतसमस्यायां दीयमानायां अन्येपि कवयोपि समस्यां ददु र्वा नेति । कविः । एकवदन—कुमार राजकुमार सम्यगालोचित मुच्यते । श्रूयताम् । श्रीमन्महाराजेन संस्कृतसमस्यापूरण माकर्ण्य भाषासमस्यापूरणावधानार्थं संज्ञापिताः शतशो भाषाकवयो वयमप्येकां समस्यां ददाम इत्यहमहमिकया भाषा-कवित्वकरण मतिकठिन मिति स्वगतं विचिंत्य साटोपं विकटवर्णघटन-पटु इद मापेतुः । स कवि स्तानित्थ मुत्तरयांचकार ।

संस्कृतसिंहे गर्जति गच्छति गहनाद्व्रज इवेंदुशब्दः ॥
शाखामृग इव भाषां निलीय शाखांतरे वसति ॥ २७३ ॥

तत स्ते तिरस्कृता इव सरोषं समस्यां ददुः । तत्र परकृतकाव्योल्लास-नोल्लासितवेदव्यासा रघुनाथव्यासा ह्यनुप्रासालंकारालंकरणविभीषणस्थापन यशःसमुल्लासितसर्वाशाः प्रथममिद माशंसुः । एवं तेन कविना प्रोच्यमाने

स राजकुमारः पुनरप्येव मवदत् । अहो श्रीमन्महाराजेन श्रीमत्सत्राई-महाराजेन च द्वादशभाषाविरचितराधामाधवविलासः श्रवणपथं नीतः तत्रापि भूयांस श्चमत्कारा वर्तंते इत्यस्माभि राकर्णित मिदानीं गायकै र्गायनरीत्या स प्रबंधोपि गीयते तर्हि सोपि भाषासमस्याप्रकरणानंतरं भूयादित्यादिदेश । तत स्तदानीं तेन कवीश्वरेण । तावेव त्रिम्मलवेंकट-नायकौ गायकौ सप्रेमप्रेरितौ यदगायतां तदेवास्माभि रभ्यस्त मिदानीं गीयते श्रोतव्यं ॥ श्रीः ॥

॥ इति श्रीमज्जयरामकवीश्वरविरचिते राधामाधवविलासे चंपूकाव्ये राजनीतिवर्णनं नाम दशमोल्लासः ॥ १० ॥

---

## एकादश उल्लासः

ततः स रासिकजनसमाज स्तस्मात् प्रबंधगायकादामूलचूलं संस्कृत-राधामाधवविलासं श्रुत्वा पुनरप्येवं पप्रच्छ । अहो प्रबंधपाठका स्तेन राजकुमारेण संस्कृतराधामाधवविलासश्रवणानंतरं यदश्रावि तत्सर्वमादितो वयं श्रावणीयाः । श्रूयतां । ततः स राजकुमार स्तं कवीश्वरं भाषासम-स्य प्रकरणं कथनीयमित्युक्तवान् । कविः ।

( १ )

### ॥ रघुनाथव्यासो यथा ॥

॥ बैरनकी वधू फिरे बैरनके बनमे ॥

मालामकरंद सुव साहेब बलि बंड तुव दापहि सो कांपे तंहा कोन रहे रनमे ॥
राजानके राजा तुव बाजा उन सह्यो जात धाकतु है साहिजहां तहां मनमे ॥
बाजत कर्णाटक भाजन कर्णाटुक बाटनमें कांगडें हाटक सेतनमे ॥

बालमकी बाट लखें वारबार बावरिसी बैरनकी वधू फिरे बैरनके बनमे॥१॥

( २ )

चंदनभाखागहनके ग्रीवखमरुतुमुर ज्ञात ॥
रघुनंदनकवि त्यौं कही बिखमसमस्या भांत ॥

जथा ।

॥ नौद्रुमके नवपल्लव राते ॥

वारिजलोचनि बालनवोढजु
खेलति ही कहु ख्यालके नांतें ॥
कान्ह अचानक आन गही
कर छुवत छातिन्ह कामके माते ॥
चौंकिगरि द्रिगचंचलतार
निकौं लभें भौंर मनों फहराते ॥
हात नचावत बातन यौं मनो
नौद्रुमके नवपल्लव राते ॥ २ ॥

( ३ )

ठाकुर चतुर दसों दधके सोहु न कोहु न लेत ।
वर्णौं साहेब साहे यौं अर्थसमस्या देत ॥
चारि चरण जमक करि करो सवय्या एक ।
ज्यामें नरपति साहे कों वर्णों कछुक विसेख ॥

सो जथा ।

साहेब तों सम कोन अहें ।
सूरजु सूरज उपर ताप तपो हैं ॥
कौनु कहुं अब तेरे मुकाबल ।
काबल ते कारभार लयो है ॥
बांधि जमद्धर साहें तें माजकु ।
साहे तमाजकु भैजु भयो है ॥
साहिजु हि कर लेत फिरंग ।
फिरंगिनकों फिर रंग गयो है ॥ ३ ॥

( ४ )

तब कवि लछिराम कहि ऐसे ही नृप साहि ॥
फूलि तिलोकमों फैलि है सो कीर्तन बरनो काहि ॥

जथा ।

साहेब तेरीय कीर्त्ति पौन सों गौनके अधिकता तें लरी है ।
न्याव कुंदा फिरे तिरिभौनमों ता पर शंकर नीति करी है ॥
पडन लियो पवनासन लीलिवो कीरती वंद त्यौं सीर धरी है ।
जोन्ह दुकूल दयो बहूमोल सो फुलि तिलोकमौं फैलि परी है॥४॥

( ५ )

शामगुसाईयों कहि अंबा ते सहाये ॥
अर्थचित्र कछु कवि कहो ज्या पर रीझे साहे ॥

जथा ।

तैं तरवार गही करवारिज च्यारि दिसा अरिराजु भागे ।
वैरिवधु वैंचढीं गढकूं सो खडि रह नेन तमों नहि जागे ॥
चंद बच्यो उन चंदमुखी बिच बंद हि चंद विधुंतुद आगे ।
शाह बली तैं बाहुनको जसु राहु ससी वस राहन लागे ॥ ५ ॥

( ६ )

तब ठाकुर शिवदास तयौं कहत समस्या हतं ।
बह कबिकोविद दरबरकागजपर लिखि लेत ॥

जथा ।

मालमकरंद सुव साहे तेरे वैरनकी बंदरके बंद परी कंदरिमों सुंदरी ॥
कोमलकमलहूतकुद्मालिनी भाजभाज साज पर सोय गई रोयरोय कै घरी
वनचर आयसुंगे तालफल जानि कुच बिंबफलविभ्रसों ओंठ मूठमों धरी
दारिके बीज जानि दांत गहे दांतानिसों औरऔर भांत भातकी विपात्ति गात कों करी ॥ ६ ॥

( ७ )

भाखाकाननकेहरी तब कवि केहरिनाम ॥
एक ठोर नृप साहेको वरनो गुन जसधाम ॥

जथा ।

बाडवमो तायो रवि खारे सिंधुपे उजरो थें तेरे तेजु तरनिकिं कला उन छूपि है ।

तैसे जस लेस हुकि उपमा न सुधा पावे वार डारि सुर धुनि ज्यों
कामधेनु दुही है ॥
तेरे गुनगानिबे कें विधिना विधु ये मेरु करि तारा मुकताहल माल
मानो गहि है ।
साहे गुन जसधाम गम थक्यो अष्ट ज्याम याते कहे जयराम तेरे
संम तू ही है ॥ ७ ॥

( ८ )

विविध समस्या सुनत तब साहे भये संतुष्ट ॥
भाषा संस्कृत सब कवि तांहां वा कवि पर भये रुष्ट ॥
दुसरे दिन काबितिलक तहां तवको पाछे थापी ॥
आगे बैठ्यो जाय कहिं कालिदास हों आपी ॥
अधिकाइ यह जानिके कूर कविनको काम ॥
नृपति साहेको देखि मुखयौं कहि कवि जयराम ॥
आजहि यो मेहमनि हो बैठा आंगुज्याये ॥
कालिदास तुम होहगे हम हु जानत आहे ॥
दुसरे दिन सब कविनि मिलि एसो कियो विचार ॥
बैठककी खलबल करें सो कवि देख्यो दिन च्यार ॥
ता पर कवि यह कवितकी पढि गहिं दियो नृपढाव ॥
तब तें कवि जयराम भय प्रसिद्ध दस दिज नाव ॥

यथा ।

जेति मही महाराज गही तुम खग जोर और देश देखे जेते साय-
रके धरा में ।
तेति तेति भाखा सीखि डारि दयि दूर भीखि आश्रित सो आय
रखो साहे तेरे डेरा में ॥
भट पावे तीन स भाट पावे सात स अवरज देखता हुं आजलग
मेरा में ॥
भट कहे भाटनमे भाट कहे भटनमें एसो भयो जयराम लीन मन
रामे ॥ ८ ॥

( ९ )

एक दिन नरपती साहे कहिं गंग हि सो होत ।
तो बरनत एसो कछु जैस कपोतके पोत ॥

